योगः कर्मसु कौशलम्

AHNIK VARTA PATRAM
Email - ahnikvartapatram@gmail.com

# आह्निक वार्ता पत्रम्

RNI No. : UPSAN/2018/76680

वर्ष-3 अंक 303 संस्कृत दैनिक/ प्रात; संस्करण | प्रयागराज 28 अगस्त 2021 शनिवार | पृष्ठ-4 | मूल्य- 2 रुपये

### सुभाषितम्

काव्यशास्त्रविनोदेन कालो गच्छति धीमतां।
व्यसनेन च मूर्खाणां निद्रया कलहेन वा॥

अर्थ – बुद्धिमान लोग काव्य-शास्त्र का अध्ययन करने में अपना समय व्यतीत करते हैं। जबकि मुर्ख लोग निंद्रा, कलह और बुरी आदतों में अपना समय बिताते हैं।

### संक्षेपेण वार्ताः

## काबूल् विमानपत्तने आत्मघात्याक्रमणम् - 40 जनाः हताः

**काबूल ।** अफ्गानिस्थानतः अभयार्थिनः स्थानान्तरं नीयमानवेलायां काबूलस्थे हमीद् कर्सायि विमानपत्तनस्य समीपे स्फोटनद्वयं सञ्जातम्। 40 जनाः मृताः अनेके व्रणिताः अभवन्। ऐ एस् भीकरसंस्थायाः आत्मघातिभिरेव स्फोटनं कृतमिति तालिबानवक्ता सबीनुल्ला मुजाहिद् इत्यनेन उक्तम्। स्फोटनेन सह कृते भुशुण्डिप्रयोगे कतिपयाः यू एस् दौत्यसेनाङ्गाः अफ्गानिस्थानीयाः महिलाः बालकाश्च मृताः इति 'पेन्टगण'वक्ता जोण् किर्बी न्यगादीत्।



## संस्कृत भाषा राष्ट्रिय भाषारूपेण समादृता समंलकृता च भविष्यति

**प्रयागराजः /प्रतापगढ़ः।** एतत् आनन्दस्य विषयं भविष्यति यदि संस्कृत भाषा राष्ट्रिय भाषारूपेण समादृता समंलकृता च भविष्यति। एतत् असम्भवम् अपिनास्ति। दुष्करंभवितुं शक्येत। परन्तु यदिव्यवहारिक रूपेण सरल संस्कृत भाषा लोकव्यवहारे प्रयुक्ता भवतिचेत् तत् दिनं अवश्यमेवा गमिष्यति, यदा संस्कृत भाषाराष्ट्रिय भाषास्थाने सुशोभिता भविष्यति। चिन्तनस्य विषयमस्ति यत् प्रान्तेप्रान्ते ग्रामेग्रामे, नगरेनगरे अस्माकं भारत वर्षे विभिन्न धार्मिक अनुष्ठानेषु संस्कृत भाषयाबिनाकोऽपि क्रियाकाण्डः न भवति। कोऽपिकुत्रापिविरोधं करोतिकिम विभिन्न भाषाभाषी जनाः स्व मातृभाषां अपिविहाय संस्कृतं अवलम्ब्य जन्म, मुण्डन, वैवाहिक इत्यादयः शुभकार्याणि कुर्वन्ति। मृत्योपरान्तमपि ये क्रियाः भवन्ति तत्रापिसंस्कृतभाषा एव प्रयुक्ताभवति। महत् आश्चर्यं या भाषा सुखदुखयोः समभावेन अस्माभिः प्रयुक्ताभवति, साकिमथ 'राष्ट्रिय भाषा रूपे स्वीकार्या न भविष्यति। लोकव्यवहारेषु संस्कृत भाषा यदिप्रचलिता भविष्यतितर्हि एतत् कार्यं सरलं भविष्यति। लोकव्यवहारे यदासहज संस्कृत सम्भाषण आवश्यकम्। लोकव्यवहारे यदासहज शब्द योजनया सहव्यवहारिक वाक्यानां प्रयोगः प्रचलितः भविष्यतिचेत् सम्पूर्ण भारतदेशे विभिन्न भाषाभाषी जनाः स्व मातृभाषया सह संस्कृतं अपि स्वीकरिष्यन्ति। एतेनभाषाजन्य मतभेदाः अपिसमाप्ताभविष्यन्ति। आदरणीयः डॉभीमरावअम्बेडकरमहोदयः अपि संस्कृतस्य प्रबल पक्षधरः आसीत्। संस्कृतंराष्ट्रिय भाषाभवितव्या, डा बलदेवानन्दसागरः इति शीर्षकतः आह्निकवार्ता पत्रे गतदिवसे एकः समाचारः अपि प्रकाशितः।

**-श्रीमती रश्मि द्विवेदी**
**वेद विज्ञानं प्रवर्तनं समितिः**
**जगतपुरः कैलीडीहः प्रतापगढ़ः।**

### रात्रौ नववादनपर्यन्तम् आपणान् पिधातुम् अपि च जनेभ्यः गृहेषु वासस्य प्रदास्यते अनुदेशः

# उत्तरप्रदेशे दृढः भविष्यति रात्रिनिषेधाज्ञा, अधुना रात्रि नववादनतः आरक्षकाः वादयिष्यन्ते हूटरयन्त्रम्

### प्रदेशे तृतीय लहरीम् उद्दिश्य सज्जता तीव्रा, द्वितीय लहर्याः स्थगिता गतिः

## सक्रियसङ्क्रान्तेषु आगता न्यूनता, परीक्षणे, सूच्यौषधीकरणे च उत्तरप्रदेशः प्रथमः

**लखनऊ,।** महाराष्ट्रे केरले च वर्धमानसङ्क्रान्तान् उद्दिश्य मुख्यमन्त्रिणा योगिना आदित्यनाथेन उत्तरप्रदेशे रात्रिनिषेधाज्ञायाः दृढतया पालनं कर्तुं निर्दिष्टम्। प्रदेशे न्यूनसङ्क्रान्तानन्तरम् अपि कोविडनवाचारस्य दृढतया पालनं कर्तुम् उक्तम। अधुना रात्रौ नववादनतः आरक्षकाः हूटरयन्त्राणि वादयित्वा जनेभ्यः आपणिकेभ्यश्च आपणं पिधातुं सतर्कीकरिष्यन्ति । येन रात्रौ दशवादनपर्यन्तं प्रदेशस्य सर्वाः आपणाः पिहिताः भवेयुः । वदामि यत् अन्येषां प्रदेशानाम् अपेक्षया उत्तरप्रदेशस्य स्थितिः अति उत्तमा अस्ति। सक्रियसङ्क्रान्ताः भवेयुः परीक्षणस्य सूच्यौषधीकरणस्य वार्ता वा प्रदेशसर्वकारेण समये स्वीकृतानां निणर्यानाम् एव परिणामः अस्ति यत् अद्य सर्वाधिकजनसङ्ख्यावान् उत्तरप्रदेशः अन्येषां प्रदेशानाम् अपेक्षया कोरोनासङ्क्रमणे नियन्त्रणं स्थापयितुं प्रथमः अस्ति । सक्रियसङ्क्रान्तानां स्थितेषु उत्तरप्रदेशस्य स्थितिः अन्येषां राज्यानाम् अपेक्षया उत्तमः अस्ति । प्रदेशे यत्र सक्रियसङ्क्रान्तानां सङ्ख्या अधुना 342सङ्ख्यकाः अस्ति तत्रैव जनसङ्ख्याकारणेन उत्तरप्रदेशस्य अपेक्षया बहुन्यूनजनसङ्ख्यामानेषु अन्येषु राज्येषु अधुना अपि सङ्क्रमणे नियन्त्रणं न प्राप्तुं शक्यः । अपरेषु राज्येषु सहस्रसङ्ख्यकासु सक्रियसङ्क्रान्ताः अभिलिख्यन्ते । महाराष्ट्रे 50,183सङ्ख्यकाः, केरले 1,70,312सङ्ख्यकाः, कर्नाटके 19,318सङ्ख्यकाः, तमिलनाडोः 18,352सङ्ख्यकाः, आन्ध्रप्रदेशे 14,061सङ्ख्यकाः, पश्चिमबङ्गाले 9,185सङ्ख्यकाः, तेलङ्गानाराज्ये 6,295सङ्ख्यकाः आहत्य कोरोनासङ्क्रमणस्य सङ्क्रान्ताः अभिलिखिताः ।

### अन्येषु राज्येषु वधय्तता कोरोनासङ्क्रान्तान् उद्दिश्य मुख्यमन्त्रिणः योगिनः दत्तः उत्तरप्रदेशे दृढतायाः आदेशः



योगिनः उत्तरप्रदेश प्रतिदर्शेन दत्तः केरलाय पराजयः, तृतीलहर्यां योगिसर्वकारस्य तीव्रा दृष्टिः

## योगिनः उत्तरप्रदेश प्रतिदर्शेन केरलः पराजितः

सर्वाधिकजनसङ्ख्यामाने उत्तरप्रदेशे मुख्यमन्त्रिणः योगिनः आदित्यनाथस्य निर्णयैः तीव्रतया सङ्क्रमणे नियन्त्रणं प्राप्तः। केरलस्य अपेक्षया उत्तरप्रदेशस्य स्थितिः अति उत्तमा अस्ति । केरले तीव्रतया कोरोना सङ्क्रान्ताः वर्धन्ते। कोरोना सङ्क्रमणस्य द्वितीयलहर्याम् उत्तरप्रदेशेन समधिकं कोरोना सङ्क्रमणे नियन्त्रणं प्राप्तम्। 3.5कोटिजन सङ्ख्यावति केरले अगस्तमासस्य षड्विंशतिदिनाङ्के 31,445सङ्ख्यकाः नूतनासङ्क्रान्ताः अभिलिखिताः, यः देशे अभिलिखितानाम् आहत्य सङ्क्रान्तानां सर्वतोवृहद्भागः अस्ति। तत्रैव चतुर्विंशति कोटिमितजन सङ्ख्यामाने उत्तरप्रदेशे अस्याम् अवधौ केवलं नवदशसङ्क्रान्ताः अभिलिखिताः।







### तृतीयलहर्यां योगिसर्वकारस्य तीव्रादृष्टिः

उत्तरप्रदेशे सम्भावितां तृतीयलहरीम् उद्दिश्य योगिसर्वकारः सज्जतायै अन्तिमरूपं प्रदाने संलग्नः। प्रदेशे कोरोनासङ्क्रमणस्य प्रथमाद्वितीयालहर्योः नियन्त्रणेन सह चिकित्?सीयसुविधासु तीव्रतया वर्धनं क्रियते। सर्वाधिकजनसङ्?यामाने उत्तरप्रदेशे प्रतिदिनं सार्धद्विलक्षधिकानि परीक्षणानि क्रियन्ते । गतचतुर्विंशतिहोरासु जातानि 2,16,629सङ्ख्यकेषु परीक्षणेषु नवदशनूतनसङ्क्रान्ताः अभिलिखिताः। अधुना पर्यन्तं प्रदेशे 7,12,89,637सङ्ख्यकानि परीक्षणानि कृतानि । सङ्क्रान्तप्रतिशतं 0.01प्रतिशतं निर्मितम् अस्ति अपि स्वास्थ्यलाभान्वितप्रतिशतं 98.6प्रतिशतम् अस्ति । वदामि यत् गतचतुर्विंशतिहोरासु षष्टिः जनपदेषु एकम् अपि नूतनः सङ्क्रान्तः न प्राप्तः।

### सूच्यौषधीकरणे उत्तर प्रदेशः प्रथमः

चतुर्विंशतिकोटिजनसङ्ख्यामानस्य उत्तरप्रदेशस्य अपेक्षया अन्याः प्रदेशाः सूच्यौषधीकरणे बहु पृष्ठे सन्ति । पश्चिमबङ्गालः, महाराष्ट्रः, देहली चेत्यादिभिः सह अन्यप्रदेशेषु यत्र न्यूनजनसङ्ख्यानन्तरम् अपि सूच्यौषधीकरणं मन्दगत्या प्रचलति तत्रैव उत्तरप्रदेशेन निरन्तरं कीर्तिमानं स्थाप्यते। उत्तरप्रदेशे अधुना पर्यन्तं त्रिषष्टिलक्षषड्कोट्यधिकानि सूच्यौषधिकरणानि कृतानि। येषु अधुना पर्यन्तं अष्टपञ्चाशतलक्षपञ्चकोट्यधिकेभ्यः प्रथमा मात्रा पञ्चलक्षैककोट्यधिकेभ्यः द्वितीयामात्रा प्रदत्ता ।

### 342 संक्रयकानि प्राणवायु संयन्त्राणि क्रियाशीलानि



सम्भावित तृतीलहरीम् उद्दिश्य अधुना पर्यन्तं सम्पूर्णप्रदेशे 342सङ्ख्यकानि प्राणवायु संयन्त्राणि क्रियाशीलानि कृतानि। प्रदेशे प्रायेण 552 सङ्ख्यकानि प्राणवायु संयन्त्राणि क्रियाशीलानि कर्तुं लक्ष्यं तावत् चिकित्सालयेषु प्राणवायोः न्यूनता न भविष्यति ।

### वैश्विकस्तरे उत्तरप्रदेशस्य एकजनपद–एकोत्पादस्य उत्पादानां दास्यते परिचयः, प्रप्रथमं विना वस्तुसेवाकराणां शिल्पकाराणां भवति पञ्जीकरणम्

# एकजनपद–एकोत्पादस्य वृद्धिः, अधुना फ्लिपकार्ट–अमेजन अपि पराजितौ

**लखनऊ।** मुख्यमन्त्रिणः योगिनः आदित्यनाथस्य वृहद् परियोजना 'एकजनपद–एकोत्पादः' वैश्विकस्तरे स्वकीयः परिचयः निर्मीयमानः अस्ति । प्रदेशस्य हस्तशिल्पं वैश्विकस्तरे प्रोन्नेतुं वृहद् प्रक्रमः आरब्धः। फ्लिपकार्ट–अमेजन–सदृशम् एकजनपद–एकोत्पादः स्वकीयं ई–कामर्स–मञ्चस्य प्रमोचनं करिष्यति । तावत् अस्य क्षेत्रपरीक्षणं प्रचलति । उत्तरप्रदेशस्य एकजनपद–एकोत्पादाय एषः प्रथमः समर्पितमञ्चः भविष्यति । मुख्यमन्त्रिणः योगिनः निर्देशे वैश्विकस्तरे वर्धमानः ऑनलाइन–व्यवसायम् उद्दिश्य प्रदेशस्य एकजनपद–एकोत्पादाय एकः नूतनः आपणः प्राप्स्यते । एतन्निमित्तं सज्जीक्रियन्ते ई–कामर्स–मञ्चे केनापि वस्तुसेवाकरपञ्जीकृतः व्यवसायिकः स्वकीयः उत्पादः विक्रेतुं शक्यते । सर्वकारपक्षतः प्रप्रथमवारं विना वस्तुसेवाकरपञ्जीकर्त?णाम् एकजनपद–एकोत्पादस्य शिल्पकारान् उपविक्रेता निर्माप्य सम्मिलिताः क्रियन्ते । अनेन ऑनलाइनमञ्चद्वारा क्रयणे शिल्कारेभ्यः साक्षात् सन्देशः प्रेष्यते अपि च सहायतासङ्ख्याद्वारा दूरवाण्यां वक्तुम् अपि शक्यते यत् स्वकीयानि उत्पादानि सिद्धानि कुर्वन्तु । एतस्यानन्तरं सम्बद्ध शिल्पकारद्वारा उत्पादं स्वीकृत्य सामग्रीसहयोगी ग्राहकपर्यन्तं प्राप्यति ।



## एकजनपद–एकोत्पादापणस्य शीघ्रं प्रमोक्ष्यते ऐप – डॉ. सहगल

सूक्ष्म–लघु–मध्यम–उद्यमस्य अवरमुख्यसचिवेन डॉ. नवनीतसहगलेन उक्तं यत् हस्तशिल्पविकासविपणननिगमेन सह एकजनपद–एकोत्पादस्य आपणः निर्मीयते । अनेन वस्तुसेवाकरे पञ्जीकृतानां अपि च वस्तुसेवाकरे अपञ्जीकृतानां शिल्पकाराणां लाभः अस्ति । ग्राहकम् अपि अस्याः वार्तायाः प्रमाणं भवति यत् तेन जनपदस्य एकजनपद–एकोत्पादं क्रीतं, तद् विश्वसनीयम् अस्ति । तेनोक्तं यत् ऑनलाइनमञ्चे एकजनपद–एकोत्पादस्य उत्पादानां निःशुल्कं सूचीबद्धम् अपि क्रियते अपि च शीघ्रमेव एकजनपद–एकोत्पादापणस्य ऐप अपि प्रमोक्ष्यते ।

### फ्लिपकार्ट-अमेजनसदृशं स्वकीयं ई– कामर्स–मञ्चस्य प्रक्षेपणं करोति एक जनपद– एकोत्पादः, ऐप अपि निर्मीयमानम्

### प्रचलति क्षेत्रपरीक्षणं, हस्तशिल्प विकास विपणन निगमेन सह एकजनपद–एकोत्पादस्य आपणः निर्मीयते

**फ्लिपकार्ट, अमेजन, ईवे, ऑनलाइन, साइट, इत्येषु एकजनपद, एकोत्पादस्य पञ्चदश श्रेण्याः एकादश सहस्त्रं उत्पादकानि**

मुख्यमन्त्रिणा योगिना गतसार्धचतुर्वर्षे प्रदेशस्य पारम्परिकोत्पादेभ्यः नूतनपरिचयः प्रदत्तः । एतन्निमित्तं सर्वकारपक्षतः हस्तशिल्पिभ्यः शिल्पीकारेभ्यश्च विभिन्नयोजनानां माध्यमेन प्रोत्साहितं कृतम् । एतत् अतिरिच्य तकनीकी–उन्नयनाय तेभ्यः प्रशिक्षणं अपि दत्तम् । साकमेव अनुवृत्तिं प्रदाय आर्थिकरूपेन सहयोगः अपि कृतः । यस्य परिणामः अस्ति यत् प्रदेशेन प्रप्रथमं पारम्परिकोत्पादेभ्यः नूतनपरिचयः प्राप्तः अपि च ऑफलाइनविक्रयणम् अतिरिच्य ऑनलाइनविक्रयणम् अपि आरब्धम् । गतसार्धद्विवर्षेषु फ्लिपकार्ट– अमेजन– ईवे– ऑनलाइन–साइट–इत्येषु पञ्चदशश्रेण्याः एकादशसहस्त्रं उत्पादाः एकजनपद–एकोत्पादस्य अस्ति अपि च प्रायः 355सङ्ख्यकैः शिल्पकारैः स्वकीयं पञ्जीकरणं कारितम् । ऑनलाइन व्यवसाय माध्यमेन शिल्पकारैः चतुर्विंशतिकोट्यधिकानां व्यवसायः अपि कृतः ।

## सम्पादकीयम्

### आधुनिकी सन्दर्भेऽपि शरणागतानां स्वरूप वैविध्यं

भारतं सदैव शरणागतानां परिपालकः आसीत्। अद्यापि इयं परम्परा विद्यमाना। आधुनिकी सन्दर्भेऽपि शरणागतानां स्वरूप वैविध्यं भवितुं शक्यते। प्रवासिनः अपि शरणागतः भवितुं शक्यते वैदिशिकाश्चापि शरणगतश्रेण्याम समाहिताः भवन्ति। तेषां समेषां सहाय्यं कर्तुम् परम्परा वैदिककालादेव अद्यावधिपर्यन्तं प्रचलत्येव। उत्तमस्यापि वर्णस्य नीचोऽपि गृहमागतः। तस्य पूजा विधातव्या सर्वदेवमयोऽतिथि।। अर्थात् उत्तम से उत्तम वर्ण के यहाँ भी कोई अतिथि वह चाहे कितना भी नीच हो यदि आये तो उसकी पूजा करनी चाहिए। कहा भी है- अतिथिर्धर्मरूपेहि गृहस्थाना गृहे गृहे। 'अतिथिसत्कारः केवल शिष्ट पुरुषों की परम्परा के कारण अनुवर्तनीय नहीं है अपितु इसके न करने से नाना प्रकार की हानियाँ हो सकती हैं। यह स्वयं कठोपनिषद् में लिखा है वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान्।

तस्यैताँशान्तिं कुर्वन्ति हर वैवस्वतोदकम्।।

## इयं मुक्तिः ब्रह्मज्ञाने सत्यपि यावत् प्रारब्धस्य क्षयो न भवति

शुद्धः अनन्तगुणयुक्तः अचिन्त्यशक्तिमान् सच्चिदानन्दविग्रहः श्रीकृष्ण एव जगत्कारणः। अयं नित्यज्ञानानन्दादियुक्तः विभुः। प्रकृतिना अस्पृष्टः सन् स्वतन्त्रः। अयमेव जीवस्य भोगापवर्गयोः विधानं करोति। रूपहीनः सन्नपि भक्तानाम् उद्धाराय धृतविग्रहो भवति। लोकानां पालनाय एव अयं धरायामवतरति। तथाहि त्रिविधा अवताराः स्वीक्रियन्ते अंशावतारः गुणावतारः शक्त्यावेशावतारः। तत्र अंशावतारः द्विविधः पुरुषावतारः यथा कारणार्णवशायी भगवान् नारायणः, लीलावतारः मत्स्यकूर्मादिः। गुणावतारो यथा ब्रह्मविष्णुमहेशादिः। शक्त्यावेशावतारः यथा सनकव्यासादिः।
जीवः ब्रह्मणः एव एकदेशः परन्तु ततः भिन्न अणुपरिमाणः। भवति अयं ज्ञाता सत्त्वादिगुणत्रययुक्तः परमात्माधीनः श्रीहरेः नित्यदासस्वरूपः। परमात्मनः अंशिनः अंशः किञ्च तस्यैव चैतन्यरूप इति कृत्वा अभिन्नः, अणुपरिमाणः ईश्वरनियम्य इत्यतः भिन्नोऽपि भवति जीवः। एवं परमेश्वरस्य अचिन्त्यशक्तिप्रभावेण भिन्नोऽपि अभिन्नः इत्यतः दर्शनमिदम् अचिन्त्यभेदाभेद इति उच्यते। परमात्मनः अंशोऽपि द्विप्रकारकः भवति स्वांशः स्वरूपांशः च। स्वांशो नाम मत्स्यादिः अवतारः स्वीकरणीयः। स्वरूपांशो नाम जीवः।
जगत् परमात्मा मायाशक्तिप्रभावेण क्षणमात्रेणैव जगत् सृजति। इयं माया भवति सत्त्वरजस्तमसां साम्यावस्था तथा नित्या। माया प्रकृतिः अविद्या इत्यादिनानाशब्दैः व्यवह्रियते। मायाशक्त्या जीवशक्त्या च परमेश्वरः जगत् उपादानकारणं पराशक्त्या च निमित्तकारणं भवति। एतेन परमात्मनः कूटस्थत्वस्य विरोधो न भवति। यतः उपादानकारणस्यैव परिणामो भवति न तु निमित्तकारणस्य। निमित्तकारणरूपेण स कूटस्थ एव तिष्ठति। जगन्निर्माणाय परमेश्वरस्य ईक्षणं सत्यं, तस्मादेव पृथिव्यादिभूतानामपि सत्यत्वम्।
अत्र सृष्टिप्रक्रिया एवंरूपा - आदौ परमेश्वर एव आसीत्। ततः माया उत्पन्ना, परमात्मनः ईक्षणेनैव सा कार्यप्रवृत्ता भवति। तत अक्षरवाच्यम् अव्यक्तं जायते। अक्षरात् महतः उत्पत्तिः महतः अहङ्कारस्य। सात्त्विकाहङ्कारात् मनसः देवतानां च। राजसाहङ्कारात् इन्द्रियाणामुत्पत्तिः भवति। तामसाहङ्कारात् शब्दतन्मात्राणां ततः पञ्चभूतानि जायन्ते। सर्वत्रैव ब्रह्म कारणात्मना प्रविश्य सृष्टिकार्यं सम्पादयति। अत्र मुख्यप्राणः साक्षात् ब्रह्मणः उत्पन्नः। अत्र मुख्यप्राणः भौतिकात् वायोः भिन्नः सन्नपि न वह्न्यादिवत् सम्पूर्णः भिन्नः पदार्थः अपि तु वायुविशेषमात्रः। महाभूतानामुत्पत्त्यनन्तरं परमेश्वरस्य इच्छयैव पञ्चीकरणद्वारा नामरूपाभ्यां तेषाम् अभिव्यक्तिः भवति ततः स्थूलब्रह्माण्डस्य उत्पत्तिः भवति।मोक्षस्वरूपं तत्साधनञ्च यज्ञः दानं तपः शमदमादिः भक्तिः वैराग्यम् उपासना इत्यादीनामनुष्ठानेन भगवान् प्रत्यक्षः भवति। भक्तस्य भक्त्या प्रसन्नः सन् भगवान् स्वस्य अचिन्त्यकृपाशक्त्या भक्तस्य सविधे आत्मस्वरूपम् अभिव्यञ्जयति। एकरूपः सन्नपि स सख्यदासादिनानाभावेन भक्तस्य निकटे आत्मानं प्रकटीकरोति। जीवस्य वैराग्ये उदिते सति सन्न्यासस्वीकारस्यापि विधानमस्ति अस्मिन् मते। अत्रापि ज्ञानोत्पत्तौ यज्ञादिकर्माणाम् आवश्यकता नास्ति। अतः ज्ञानकर्मसमुच्चयवादः अत्रापि नाङ्गीकृतः।
ब्रह्मलोके गमनानन्तरं श्रीकृष्णस्य सायुज्यमेव मुक्तिः। इयं मुक्तिः ब्रह्मज्ञाने सत्यपि यावत् प्रारब्धस्य क्षयो न भवति तावत् नोपलभ्यते। साधनेन सिद्धः स्थूलदेहत्यागानन्तरं सूक्ष्मशरीरेण अर्चिरादिद्वारा देवयानमार्गेण ब्रह्मलोकं गच्छति परंब्रह्म च प्राप्नोति। अथवा भगवान् तस्य अतिप्रियं भक्तम् अर्चिरादिव्यतिरेकेणैव गरुडकर्तृकं स्वधाम प्रापयति। अत्र तस्य सूक्ष्मदेहस्य नाशः किञ्च ब्रह्मलोके भोगार्थं योग्यं शरीरम् उत्पद्यते। सत्यसंकल्पः सत्यकामः पुरुषः अत्र दिव्यम् ऐश्वर्यम् अनुभवति। परमेश्वरस्य अनुग्रहेणैव स सर्वज्ञो भवति, परन्तु जगत्सृष्टिसामर्थ्यं तस्य न भवति। ब्रह्मलोकात् मुक्तानां जगति पुनरावर्तनं न सम्भवति। एवं उभयोः दर्शनयोः मूलतत्त्वानाम् आलोचनं कृतम्। उभयत्रापि वैष्णवदर्शनं यद्यपि तथापि किञ्चित् वैलक्षण्यं विद्यते इति तत्तद्दर्शनस्य वैशिष्ट्यम्।

# 'तदाहुरक्षरं ब्रह्म सर्वकारणकारणम्'

उपनिषत्सु मानवानां परमपुरुषार्थसाधिका ब्रह्मविद्या उपदिष्टा अस्ति। अत एव उपनिषत् समग्रस्यापि वेदस्य सारभूता सती वेदान्तशब्देन व्यवह्रियते। उपनिषद्वाक्यानि आधारीकृत्यैव भगवता बादरायणेन सूत्रात्मकः ग्रन्थः प्रणीतः। अत्र आपातविरुद्धवाक्यानि समन्वितानि भवन्ति। एनं ग्रन्थमाश्रित्यैव विविधानि भाष्याणि रचितानि तदनुसारं सम्प्रदायोऽपि प्रारब्धः। अद्वैतदर्शनं भवति शंकराचार्य प्रवर्तितम्। एतदेव भवति सर्वप्राचीनं वेदान्तसम्प्रदायेषु। शङ्करभगवत्पादानां भाष्यं शाङ्करभाष्यमिति उच्यते।अस्मिन् दर्शने केवलं ब्रह्मण एव सत्ता अङ्गीक्रियते। शुद्धब्रह्मणः स्वरूपस्य प्रतिपादनाशक्यत्वात् नेति नेति मुखेन सर्वत्र व्यपदिश्यते। अतः द्वैतस्य निषेधात् इदम् अद्वैतमुच्यते। अत्र जगत् शुक्तिरूप्यवत् प्रातिभासिकं भवति न यथार्थम्। जीवः ब्रह्मस्वरूप एव भवति तस्य च विभुपरिमाणत्वमङ्गीक्रियते। मोक्षश्च विस्मृतस्य कण्ठस्थहारस्य प्राप्तिरिव भवति।
शुद्धाद्वैतदर्शनं वल्लभाचार्येण प्रवर्तितम्। वैष्णवसम्प्रदायेषु एव अस्य मतम् अन्तर्भवति। एतन्मते जगत् सत्यं भवति ब्रह्मण उत्पन्नत्वात्। जीवाः ब्रह्मण उत्पन्ना नित्यरूपाः अणुपरिमाणाः। अनेन मोक्षलाभार्थं कश्चित् पुष्टिमार्गः विहितः। मोक्षप्रकारा अपि विविधा दर्शिताः।
अत्यन्तं नवीनं दर्शनं भवति अचिन्त्यभेदाभेदः। अस्य प्रवर्तने मुख्यः वस्तुतः श्रीकृष्णचैतन्यः, यः मध्वाचार्यस्य पूर्णप्रज्ञभाष्यं श्रीभागवतानुसारं व्याख्याति स्म। तस्यैव ग्रन्थरूपं प्रदत्तवान् बलदेवः गोविन्दभाष्यरूपेण। अत्रापि जगत् सत्यं भवति। जीवा ब्रह्मणः उत्पन्नाः तस्यैव अंशस्वरूपाः परन्तु ततो भिन्ना भवन्ति। जीवस्य परिमाणम् अणुपरिमाणं भवति। अत्र श्रीकृष्णसायुज्यमेव मुक्तिः सख्यदास्यादिभावेन तस्य सेवा एव मोक्षोपायः। इदानीं शुद्धाद्वैताचिन्त्यभेदाभेदयोः मूलतत्त्वानि उपस्थाप्यन्ते।
शुद्धाद्वैतम् शुद्धाद्वैतस्य प्रवर्तको भवति वल्लभाचार्यः। अस्य आचार्यस्य समयः पञ्चदशशतकम्। अस्य भाष्यम् अणुभाष्यम् इत्युच्यते। अनेन आचार्येण शङ्कराचार्येण अद्वैतवेदान्ते प्रतिपादितस्य मायावादस्य प्रमाणपुरःसरं खण्डनं कृत्वा शुद्धाद्वैतस्य प्रतिष्ठापनं कृतम्। तथा च निर्गुणरूपाया प्रेमलक्षणायाः भक्तेः प्रचारः कृतः। अस्या एव व्यावहारिकं स्वरूपं भवति पुष्टिमार्गः। अस्मिन् दर्शने कारणरूपेण किञ्च कार्यरूपेण ब्रह्म शुद्धमेव तिष्ठति। उक्तं हि गोस्वामिगिरिधराचार्येण -
मायासम्बन्धरहितं शुद्धमित्युच्यते बुधैः। कार्यकारणरूपं हि शुद्धं ब्रह्म न मापिकम्। शुद्धाद्वैतशब्दनिर्वचनम्
शुद्धाद्वैतशब्दः द्विधा व्याक्रियते -
1. शुद्धयोः अद्वैतं शुद्धाद्वैतम् इति षष्ठीतत्पुरुषः। तन्नाम शुद्धयोः जगज्जीवयोः ब्रह्मणः अद्वैतम् अभिन्नत्वं शुद्धाद्वैतं जगत् जीवश्च ब्रह्मणः अभिन्न एव इति तात्पर्यम्।
2. शुद्धं च अद्वैतं च शुद्धाद्वैतमिति कर्मधारयः। तस्यार्थः ब्रह्मणः यद् अद्वैतं तच्च शुद्धं मायासम्बन्धरहिम् इत्यर्थः।
ब्रह्म सच्चिदानन्दस्वरूपम्। अत्र ब्रह्म सविशेषं निर्विशेषमिति द्वैविध्यं नाप्नोति। एकमेव ब्रह्म अस्तिवाचिशब्देन सगुणरूपेण निरूप्यते किञ्च नास्तिवाचिशब्देन निर्गुणरूपेण निरूप्यते। व्यावहारिकावस्थायां ब्रह्म जगतः सृष्टेः स्थितेः प्रलयस्य च कर्ता भवति। ब्रह्म सर्वज्ञं सर्वशक्तिमत् भवति। सविशेषं ब्रह्म नामरूपाभ्यां व्याकृतं तथा उपाधिविशिष्टं भवति। इदं स्वरूपमेव ईश्वर इत्युच्यते। उपासनार्थं भक्तानां बहु इष्टं भवति इदं स्वरूपम्। नामरूपाभ्याम् अव्याकृतं निरूपाधिकं भवति निर्विशेषं ब्रह्म। इदमेव परमात्मेति उच्यते। एतदेव यथार्थस्वरूपं ब्रह्मणः निर्विकल्पकं निराकाररूपम् सत्। अत्र ब्रह्मणः द्वे स्वरूपे अङ्गीक्रियते।
वल्लभमतानुसारं ब्रह्म सर्वशक्तिमत् सर्वस्वतन्त्रं तथा सर्वव्यापकं गुणरहितं सर्वज्ञम्। ऐश्वर्यादिषड्गुणोपेतम् अपि तत् सजातीयविजातीयस्वगतभेदशून्यं भवति। तदेव प्रकृतिरूपेण भोग्यं भवति पुरुषरूपेण भोक्ता भवति तथा च द्वयोरपि नियामकः ईश्वरः। ब्रह्मणः अनन्तरूपाणां सत्त्वेऽपि तत् कूटस्थं सर्वविरुद्धधर्माणामाश्रयभूतं तर्केण अगम्यं च भवति। अत्रापि ब्रह्मणः जगतःअभिन्ननिमित्तोपादानकारणत्वम् अङ्गीकृतम्। यथा कञ्चित् मृत्पिण्डं ज्ञात्वा सर्वस्यापि मृदः ज्ञानं सम्भवति तथा ब्रह्मणः ज्ञाने सति ततः उत्पन्नां जीवानां जगतश्च ज्ञानं सम्भवति। यथा मृदपि सत्यं तद्विकारः घटोऽपि सत्यः तद्वदेव ब्रह्म सत्यं तत् उत्पन्नं जगत् जीवोऽपि सत्यः। एवं च ब्रह्मणो निर्गुणत्वं तथा अनन्तगुणत्वं यच्च एकस्मिन् विरुध्यते तत् प्रतिपाद्यते।
वल्लभमते यथा सर्पः कदाचित् कुण्डलीरूपेण तिष्ठति कदाचित् रज्जुवत् लम्बो भवति तद्वदेव ब्रह्मणः रूपद्वयं सम्भवति। निर्गुणमपि ब्रह्म भक्तानां कामनानुसारं नैकानि रूपाणि धत्ते।बालकृष्णभट्टमतानुसारं श्रीकृष्ण एव परब्रह्म पुरुषोत्तमः। श्रीमद्भगवद्गीतावचनात् श्रीकृष्णस्य निर्विशेषत्वादिगुणाः वर्ण्यन्ते। यथा- मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय। एवं च अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः इत्यादिश्रुतिवाक्यानां श्रीकृष्णे अन्वयं साधयन्ति। शुद्धाद्वैतमतानुसारं ब्रह्मणः रूपद्वयं वक्तुं शक्यम् तद्धि परब्रह्म पुरुषोत्तम इत्येकम् अपरं च अक्षरं ब्रह्म। परब्रह्म पुरुषोत्तम - श्रीकृष्ण एव द्विभुजः अथवा चतुर्भुजः सन् वृन्दावने अथवा वैकुण्ठादिषु स्थानेषु तद्ध्यानपरैः भक्तैः सह रममाणः तिष्ठति। भक्ताश्च तेन सह आनन्दमनुभवन्ति। अक्षरब्रह्म- श्रीकृष्ण एव समग्रस्य प्रपञ्चस्य कारणस्वरूपो भवति। तथाहि तस्य यदा इच्छा भवति बहु स्याम प्रजायेय इति तदा ततः आनन्दांशस्य तिरोभावो भवति। कश्चन नवीनमेव रूपम् आविर्भूयते तदा यच्च सर्वकारणकारणम्। इदमेव अक्षरब्रह्मशब्दवाच्यम्। उक्तं च श्रीमद्भागवते - ''तदाहुरक्षरं ब्रह्म सर्वकारणकारणम्'' इति । एतस्मात् अदृश्यत्वादिगुणस्वरूपात् अक्षरादेव देवमनुष्यगन्धर्वादीनां भूतानामुत्पत्तिः भवति।
भगवान् एव रमणेच्छया आत्मनः आनन्दांशं तिरोधाय केवलं सद्रूपेण चिदंशेन च आत्मानं बहुधा प्रकटीकरोति। तदैक्षत बहु स्याम प्रजायेय इति श्रुतिवाक्यमेव एतादृशमतस्य पोषकम्। ईश्वरस्य एव इदं नूतनं रूपं जीव इत्युच्यते। अतः जीवस्य उत्पत्तिः न भवति देहधारणवशादेव जायते म्रियते इत्यादयः व्यवहाराः सम्भवन्ति। शुद्धाद्वैते जीव अणुपरिमाणः भवति। अत्र जीवस्य त्रयो भेदाः सम्भवन्ति। ते हि शुद्धजीवः, संसारी जीवः, मुक्तजीवः। शुद्धजीवः- यथा अग्नेः स्फुलिङ्गा उत्पद्यन्ते तथैव कारणस्वरूपात् अक्षरात् जीवः व्युच्चरितः भवति। अविद्यासम्पर्कात् पूर्वम् अतिरोहितानन्द ऐश्वर्यादिषड्गुणोपेतः जीवः शुद्धजीव इत्युच्यते। तिरोहिते आनन्दांशे मायासंसर्गाच्च ऐश्वर्यादीनां लोपे सति जीवः संसारी इत्युच्यते। अविद्यासम्बन्धवशात् तस्य बन्धः जायते अत एव जननमरणचक्रे आबद्धो भवति। अयं जीवः सर्वविधसुखदुःखानां भोगं करोति तदर्थं च स्थूलसूक्ष्मादिनानाशरीराणां धारणं करोति। संसारी जीवः यदा अनेकप्रकारकाणां दुःखानां भोगवशात् आत्मानं उद्धर्तुकामः भगवतः शरणमायाति तदा भगवदनुग्रहेण स मायायाः मुक्तो भूत्वा मूलस्वरूपमाप्नोति। इयमेव जीवस्य मुक्तावस्था।
अत्र जगत् सत्यस्वरूपं भवति। जगत् साक्षात् ईश्वरकार्यं भवति न च प्राकृतं न वा परमाणुजन्यं न वा विवर्तरूपम् असद्रूपं वा किञ्चित्। ''नासतो विद्यते भावो नाभावो विद्यते सतः'' इति श्रीमद्भगवद्गीतावचनात् सद्रूपात् परमात्मनः असद्रूपस्य प्रपञ्चस्य सम्भव असम्भवः। अत एतेषां मते - प्रपञ्चो भगवत्कार्यः तद्रूपो माययाभवत्। इदं जगत् अधिकारिभेदेन भिन्नतया प्रतिभाति। तथाहि उत्तमाधिकारिणां सविधे जगदिदं ब्रह्मात्मकं शुद्धं च भवति। शास्त्राभ्यासेन संस्कृतमतानां मते तु जगत् परमात्मधर्मेण युक्तं सत् सत्यभूतं भवति। जगति मायाधर्मा ये भवन्ति ते तु मिथ्याभूताः। अविवेकिनस्तु मन्यन्ते जगत् ब्रह्मणः मायायाश्च धर्मेण उत्पन्नं किमपि सत् वस्तु। हरितोपनेत्रेण यथा सर्वं हरितं दृश्यते परन्तु तस्य हरितवर्णं मिथ्या भवति तद्वत् मायाधर्माः सर्वे मिथ्या इति एते नाङ्गीकुर्वन्ति। इयं तु भवति अधिकारिणां भेददृष्टिः, न हि जगतः वास्तविकं स्वरूपमीदृशम्। जगत् तु नित्यं सत्यं ब्रह्मस्वरूपं भवति।
शुद्धाद्वैते त्रीण्येव प्रमाणानि अङ्गीकृतानि। तानि हि प्रत्यक्षम् अनुमानं शब्दः इति। श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम्। प्रमाणेष्वनवस्थानाद् विकल्पात् स विरज्यते।।
इति श्रीमद्भागवतवचनानुसारं यद्यपि गोस्वामिपुरुषोत्तमेन प्रस्थानरत्नाकरे एतेषामुल्लेखः कृतः परन्तु अधिका विद्वांसः ऐतिह्यं शब्दप्रमाणे एव अन्तर्भावयन्ति। अतः त्रीण्येव प्रमाणानि। मोक्षस्वरूपं तत्साधनं च वैष्णवदर्शने आध्यात्मिकात् आधिदैविकात् आधिभौतिकात् तापात् ऐकान्तिकी निवृत्ति एव मोक्षः निर्वाणं वा। मायया बद्धस्य जीवस्य मुक्तिः न भवति। मुक्तस्य जीवस्य पञ्चविधात् अध्यासात् देहाध्यासात् इन्द्रियाध्यासात् प्राणाध्यासात् अन्तःकरणाध्यासात् स्वरूपविस्मृतेश्च निवृत्तिः भवति। अध्यासात् मुक्तौ सत्यां जन्ममरणात् स्वतः निवृत्तिः भवति। मुक्तिरपि द्विप्रकारका भवति सात्त्विकानां भवति सायुज्यमुक्तिः निर्गुणानां भवति ब्रह्मभावमुक्तिः। सायुज्यमुक्तिर्नाम भगवल्लीलास्वादः। जीवस्य श्रीकृष्णेन सह दिव्यवृन्दावने लीला तथा तेन सह नित्यसम्बन्ध एव मोक्षः। केचन उत्तमाधिकारिणः जीवाः सत्सङ्गादिपुण्येन भक्तिमार्गोक्तानाम् अनुष्ठानेन च सालोक्यरूपां सायुज्यरूपां सामीप्यरूपां सारूप्यरूपां मुक्तिं च अधिगच्छन्ति। ततः अक्षरब्रह्मणि लीना भवन्ति। एषा एव ब्रह्मभावमुक्तिः सा च परमानन्द स्वरूपा। वल्लभाचार्योक्तां क्रममुक्तिं सद्योमुक्तिं च आधारी कृत्य बालकृष्णभट्टेन प्रतिपादिता चतुर्विधा मुक्तिः। आद्या ऐहिकी मुक्तिः यथा सनकादिमुनीनाम्। द्वितीया पारलौकिकी उत्तमाधिकारिणां वृन्दावनादिषु दिव्यलोकेषु स्थितिः। तृतीया परममुक्तिः शुद्धब्रह्मरूपेण अवस्थानम्। चतुर्थी देवानां नित्यलीलाप्रवेशरूपा मुक्तिः।
शुद्धाद्वैते मोक्षसाधनत्वेन पुष्टिमार्गस्य विधानं कृतम्। आचार्येण आनन्दतीर्थेन यथा स्वदर्शने मोक्षसाधनत्वेन भक्तिमार्गस्य विधानं कृतं तथैव वल्लभाचार्येण पुष्टिमार्गस्य आविष्कारो विहितः। पुष्टिमार्गस्य नामकरणस्य मुख्यमाधारं भवति श्रीमद्भागवतमहापुराणम्। तत्र द्वितीये स्कन्धे पुष्टिशब्दस्य वैशद्येन आलोचनं कृतम्। पुष्टिर्नाम पोषणम्। भगवदनुग्रहेण एव जीवस्य पोषणं भवति यथा उक्तं श्रीमद्भागवते- पोषणं तदनुग्रहः। भक्तिमार्गस्य एव किञ्चित् नामान्तरं भवति पुष्टिमार्गः। यद्यपि वल्लभाचार्यः कर्म ज्ञानं भक्तिः एतेषां त्रयाणामेव भगवत्प्राप्त्युपायत्वेन ग्रहणं कृतवान् तथापि भक्तिमार्गस्यैव तेन उत्कर्षता अङ्गीकृता।
आचार्यः बलदेवः अस्य दर्शनस्य प्रवर्तकः। अस्य अपरं नाम भवति विद्याभूषणः। अस्य समयः भवति अष्टादशशतकम्। अनेन सूत्रभाष्याणामुपरि गोविन्दभाष्यनामकं भाष्यं रचितम्। मतमिदं श्रीकृष्णचैतन्येन आदृतमतः गौडीयवैष्णवैः अनुसर्यते परिपाल्यते च। एवं श्रूयते यत् श्रीकृष्णचैतन्यः श्रीमद्भागवतं किञ्च मध्वाचार्यस्य पूर्णप्रज्ञभाष्यं स्वीयमतरूपेण स्वीकृत्य लोकेभ्यः प्रसारयति स्म। तद्भाष्यं यत्र यत्र श्रीमद्भागवतस्य विरोधि भवति तत्र तत्र तेन परिष्कारः विधीयते स्म। सा व्याख्या एव परम्पराक्रमेण श्रीजीवगोस्वामिनः विश्वनाथचक्रवर्तिनश्च विद्याभूषणमहोदयैः प्राप्ता। तामेव व्याख्यां श्रीगोविन्देन स्वप्नादिष्टः सन् स भाष्यरूपेण व्यरचयत्। अस्मिन् मते वेदाध्ययनेन वेदविहितकर्मणा च यस्य चित्तं शुद्धं स नित्यानित्यविवेकवान् अधिकारी भवति। अत्र एते पदार्थाः अङ्गीक्रियन्ते - ईश्वरः जीवः प्रकृतिः कालः कर्म। जीवादिपदार्थचतुष्टयं ब्रह्मसम्बद्धं कर्म केवलं जड़ं तच्च अदृष्टादिनानाशब्दैः व्यवह्रियते। कर्म अनादि परन्तु विनाशि।

## 'ङ्यन्तात् आबन्तात् प्रातिपदिकाच्च प्रत्ययाः स्युः'

चतुर्षु पुरुषार्थेषु मोक्ष एव प्राणिमात्रस्य परमं प्रयोजनम्। मोक्षप्राप्त्युपायेषु वेदः अन्यतमं स्थानं भजते। तस्य महत्त्वभूतम् अङ्गं भवति व्याकरणशास्त्रं शब्दशास्त्रं वा। तत्र पाणिनीयशब्दशास्त्रे षड्विधं सूत्रं समुपवर्णितं महर्षिणा पाणिनिना। षड्विधेषु सूत्रेषु अधिकारसूत्राणां महत्त्वम् अतितरां विद्यते। तत्रापि च 'ङ्याप्प्रातिपदिकात्'1 इति सूत्रस्य। अतः सूत्रस्यास्य विपुलं विवेचनं विद्वद्भिः स्वस्वग्रन्थेषु कृतं वर्तते। 'स्वरितेनाधिकारः'2 इति पाणिनीयसूत्रबलेन अस्य अधिकारसूत्रत्वं इति पाणिनीयसूत्रबलेन अस्य अधिकारसूत्रत्वं भवति। अस्य चावधिः 'स्वौजसमौट्छष्टाभ्यांभिस्ङेभ्यांभ्यस्ङसोसाम्ङ्योस्सुप्'3 इत्यतः 'निष्प्रवाणिश्च'4 इति यावद्भवति। अस्याधिकारे समागतानां सूत्राणां संख्या आहत्य '1187' भवति। अस्याधिकारपरिधौ द्वादशावान्तर अधिकारसूत्राणि समायान्ति। शोधपत्रेऽस्मिन् सूत्रस्य पदार्थविचारद्वारा अस्याधिकारत्वविचारद्वारा च पाणिनीयशास्त्रे अस्य प्रासङ्गिकता चर्चिता विद्यते। 'अधि'- उपसर्गपूर्वकात् कृधातोः घञ्प्रत्यये कृते सति अधिकारशब्दः निष्पद्यते। व्याकरणशास्त्रे 'एकत्र उपात्तस्य अन्यत्र व्यापारः अधिकारः' भवतीति। यथा 'कारके'5, 'प्रत्ययः'6, 'परश्च'7 इत्यादयः। अधिकारस्य हि प्रभावः त्रिविधः भवति। तद्यथा - सिंहावलोकितं चैव मण्डूकप्लुतमेव च। गङ्गाप्रवाहवच्चापि अधिकारस्त्रिधा मताः। अधिकारः सम्पूर्णसूत्रस्य सूत्रांशपदस्य पदांशस्य चापि भवति। यथा- 'धातोः'8 'अङ्गस्य'9 'प्रत्ययः' इत्यादीनां सम्पूर्णसूत्राणाम् उत्तरत्र अनुवृत्तिः भवति।
'प्राग्दीव्यतोऽण्'10 'प्राग्वहतेष्ठक्'11 'प्राग्वतेष्ठञ्'12 इत्यादीनाञ्च सूत्रांशपदस्यानुवृत्तिः भवति। अधिकारसूत्राणि शक्तिग्राहकाणि न भवन्ति न वा संज्ञासंज्ञिप्रत्यायकानि। अतः संज्ञासूत्राणि न भवन्ति एतानि। एतेषाम् अर्थदृष्ट्या स्वतः परिपूर्णता भवति अन्येषां सूत्राणां चार्थपरिज्ञापनाय आवश्यकता न भवतीति। अधिकारस्य प्रासङ्गिकता अधिकारसूत्रैः एकत्र विधिसूत्राणाम् अल्पाक्षरत्वं रक्ष्यते अपरत्र चार्थप्रतिपादने साहाय्यम् आचर्यते। इमानि सूत्राणि पाणिनीयव्याकरणप्रक्रियायाः असन्दिग्धप्रवृत्तये अतीव महत्त्वपूर्णां भूमिकाम् आवहन्ति। एवं परिलक्ष्यते यत् सूत्रात्मकशैल्या व्याकरणस्वरूपरचनायै अधिकारसूत्राणां परिकल्पना कृता वर्तते। यद्यपि एते स्वार्थबोधाय अन्येषां सूत्राणाम् अपेक्षां न कुर्वन्ति तथापि अन्यसूत्रप्रभेदानां आर्थिकपूर्णतायै भवत्येतेषां महानुपकारः। 'ङ्याप्प्रा ति-पदिकात्' इत्यस्य सामान्यविचारः 'ङी च आप् च प्रातिपदिकञ्च' इति ङ्याप्प्रातिपदिकं तस्मात् ङ्याप्प्रातिपदिकात्। अत्र समाहारद्वन्द्वसमासः भवति तस्मात् एकवचनम्। अन्यथा ङ्याप्प्रातिपदिकेभ्यः इत्येवं सूत्रस्वरूपं स्यात्। 'ङी' इति 'आप्' इति च अनुबन्धरहितयोः ग्रहणम् अत्र सूत्रे कृतं वर्तते। अतः 'ङी' इत्यनेन 'ङीप् ङीष् ङीन्' इत्येतेषाम्, 'आप्' इत्यनेन च 'टाप् डाप् चाप्' इत्येतेषां ग्रहणं क्रियते। सूत्रस्यास्य सामान्यार्थः भवति - 'ङ्यन्तात् आबन्तात् प्रातिपदिकाच्च प्रत्ययाः स्युः।' अष्टाध्याय्यां संज्ञा-परिभाषा-विधिः-नियमः-अतिदेशः-अधिकारश्च इति षड्विधं सूत्रं समुपवर्णितं भगवता पाणिनिना। तेषु सूत्रप्रभेदेषु 'ङ्याप्प्रातिपदिकात्' इत्येतस्य सूत्रस्य अधिकारसूत्रेषु अन्तर्भावः भवति। अधिकारबोधकञ्च सूत्रं स्वयमेव भगवता पाणिनिना लिखितमस्ति 'स्वरितेनाधिकारः' इति। अर्थात् स्वरितेन चिह्नेन अधिकारः ज्ञातव्यः। तस्य च स्वरितत्वस्य या अवधिः सा एवावधिः अधिकारस्याऽपि भवति। अस्मिन्नपि सूत्रे स्वरितत्वं विद्यते। तस्य च स्वरितत्वस्य का अवधिः? का वा सीमा इत्यत्र आचार्याणां वचनं प्रमाणत्वेन वर्तते। तदुक्तम् - 'आपञ्चमपरिसमाप्तेरधिकारः।'13 अर्थात् पञ्चमाध्यायस्य परिसमाप्तिं यावत् 'ङ्याप्प्रातिपदिकात्' इत्यधिकारः गच्छति। अतः अत्र - कृतस्य स्वरितत्वस्य सा एवावधिः इति वक्तुं शक्यते। अयमधिकारः प्रकृतिरूपात्मकः भवति। अत्र च 'प्रत्ययः' इत्यधिकारः अपि आयाति। अतः एतद्वक्तुं शक्यते यत् इत ऊर्ध्वं पञ्चमाध्यायस्य परिसमाप्तिं यावत् ये प्रत्ययाः निर्दिष्टाः ते ङ्यन्तात् आबन्तात् प्रातिपदिकाच्च स्युरिति। प्रायशः तद्धितप्रत्ययाः अस्याधिकारस्य क्षेत्रे समापतन्ति। आहत्य अस्याधिकारक्षेत्रं '1187' पाणिनिसूत्रात्मकं भवति। अस्याधिकारस्य प्रभावक्षेत्रे द्वादशावान्तराधिकाराः आयान्ति। तत्र प्रथमः भवति - 'स्त्रियाम्'14 इति। अत्र हि 'ङ्याप्प्रातिपदिकात्' इत्यतः 'प्रातिपदिकात्' इत्येव अभिसम्बध्यते। यथोक्तम् - 'ङ्याप्प्रातिपदिकात्' इति सर्वाधिकारेऽपि प्रातिपदिकमात्रमत्र प्रकरणे सम्बध्यते, ङ्यापोरनेनैव विधानात्।15
एवमेव अन्येष्वपि अवान्तराधिकारसूत्रेषु अस्याधिकारस्य सम्बन्धः भवत्येव। तद्यथा - 'तद्धिताः'16 इत्यत्र सम्पूर्णस्य सूत्रस्य सम्बन्धेन अस्माभिः अर्थः कर्तुं शक्यते। 'ङ्यन्तात् आबन्तात् प्रातिपदिकाच्च तद्धिताः स्युरिति।' तृतीयः अवान्तराधिकारः भवति - 'प्राग्दीव्यतोऽण्' इति। एवमन्येऽपि प्रत्ययाधिकाराः अस्य परिधौ समापतन्ति। यथा- 'प्राग्वहतेष्ठक्', 'प्राग्घिताद्यत्'17, 'प्राक् क्रीताच्छः'18, 'प्राग्वतेष्ठञ्', 'आर्हादगोपुच्छसंख्यापरिमाणाट्ठक्', 'प्रागिवात्कः'19 इत्यादयः। अर्थनिर्देशात्मकः अधिकारः यथा - 'शेषे'20, 'कालात्'21 च।
'किं सर्वनामबहुभ्योऽद्व्यादिभ्यः'22 एष एकः प्रकृत्यधिकारः अपि अस्य सीम्नि आयाति।

## 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदिश्रिताः

अनुसृत्य गुरुः स्नेहं महिष्यां तत्त्वमुक्तवान् ततो यथावद्वेदैष प्रतिबन्धस्य संक्षयात्। कश्चिद्यतिः पूर्वं गार्हस्थदशायां कस्यांचिन्महिष्यां स्नेहं कृत्वा पश्चात्सन्यासानन्तरं श्रवणे प्रवृत्तोऽपि तेनैव स्नेहेन जनितात्प्रतिबन्धात्तत्त्वं गुरुणोपदिष्टमपि न ज्ञातवा नित्येवंविधा गाथा लोके प्रगीयते। तदानीं गुरुः तस्य मनसि महिषीस्नेहरूपी बाधास्तीति ज्ञात्वा, तन्निवारणार्थं तां तादृशं उदाहरणं उपदिष्टवान्। तदनन्तरं स भिक्षुं तत्त्वं अवबुद्धवान्। वर्तमानं प्रतिबन्धं दर्शयति।
प्रतिबन्धो वर्तमानो विषयासक्तिलक्षणः। प्रज्ञामान्द्यं कुतर्कश्च विपर्ययदुराग्रहः। वर्तमानः प्रतिबन्धश्चित्तस्य विषयासक्तिरूपः एकः प्रज्ञामान्द्यं बुद्धेस्तैक्ष्ण्याभावः, शुष्कतार्किकत्वेन श्रुत्यर्थस्यान्यथोहनं, विपर्ययदुराग्रहः विपर्यये आत्मनः कर्तृत्वादिधर्मयुक्तत्वज्ञानलक्षणे दुराग्रहो युक्तिरहितोऽभिनिवेशः, एतेषामन्यतमस्यापि सत्त्वे ज्ञानं नोदेतीत्यर्थः। अस्य प्रतिबन्धकस्य निवृत्युपायः एवं प्रदर्शित - शमाद्यैः श्रवणाद्यैश्च तत्र तत्रोचितैः क्षयम्। नीतेऽस्मिन्प्रतिबन्धेऽतः स्वस्य ब्रह्मत्वमश्नुते। शमादयः 'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भुत्वा' इति। श्रुत्यक्ताः श्रवणादयः 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुत्याभिहिताः, एतैः साधनैस्तत्र तत्र तस्य तस्य प्रतिबन्धस्य निवर्तने उचितैर्योग्यैस्तस्मिं स्तस्मिन्प्रतिबन्धे विनाशिते सति, स्वस्य प्रत्यगात्मनो ब्रह्मत्वं प्राप्नोतीत्यर्थः। भाविप्रतिबन्धः निरूप्यते - आगामि प्रतिबन्धश्च वामदेवे समीरितः। एकेन जन्मना क्षीणो भरतस्य त्रिजन्मभिः। आगामिप्रतिबन्धो जन्मान्तरहेतुः प्रारब्धशेष इत्यर्थः। तस्य च भोगमन्तरेण निवृत्त्यभावात्तन्निवृत्तौ कालनियमो न भवति। स च प्रतिबन्धकः एकेन जन्मना क्षीणो वामदेवस्य। भरतस्य त्रिजन्मभिः नृपमृगादि त्रिजन्मभिः क्षीणः इति ज्ञायते। ब्रह्मलोकाभिवाञ्छायां सम्यक्सत्यां निरुध्यताम्। विचारयेद्य आत्मानं न तु साक्षात्करोत्ययम्। इति श्लोकेनागामि प्रतिबन्धान्तरमप्यस्तीति ज्ञायते। अस्यायमभिप्रायः - ब्रह्मलोक प्राप्तीच्छायां दृढायां सत्यां तां निरुध्य य आत्मानं विचारयेत्तस्य साक्षात्कारो नैव जायते इत्यर्थः। अतः यस्मिनेकस्मिन्वा विषये अभिवाञ्छां मनस्यन्तः निगूढतया संस्थाप्य विचारः क्रियते चेदपि फलदायाकः न भवतीत्यर्थः। अत एवोक्तम् - 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदिश्रिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समुश्नुते।' ननु तर्हि तस्य कदापि मुक्तिर्न स्यादित्याशङ्क्याह - वेदान्तविज्ञानसुनिश्चितार्था इति शास्त्रतः ब्रह्मलोके स कल्पान्ते ब्रह्मणा सह मुच्यते।

## 'श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः'

नाविरतो दुश्चारितान्नाशान्तो नासमाहितः। नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् । यः श्रुतिस्मृत्यविहित्वात् पापकर्मणः अनुपरतः, इन्द्रियलौल्यात् अविरतः, विक्षिप्तचित्तश्च सः ब्रह्मविज्ञानेन स्वरूपभूतात्मानं न साक्षात्करोति। यस्तु दुश्चरिताद् इन्द्रियलौल्याच्च विरतः समाहितचित्तः शान्तमानसश्च आचार्यवान् आत्मसाक्षात्कारं प्राप्नोति इति। अनया कठश्रुत्या ज्ञायते यत् दुश्चरितादि ज्ञानप्रतिबन्धकमिति। उपदेशसाहस्त्र्यां गद्यभागे श्रीमच्छङ्करभगवत्पादैः ज्ञानप्रतिबन्धकानि शिष्यगतानि ज्ञात्वा गुरुणा आदौ तानि दुरीकर्तव्यनीति प्रतिपादितम्।2
विद्यारण्यस्वमिनः पञ्चदशी ग्रन्थे प्रथमे तत्त्वविवेकप्रकरणे भासमानमपि तत्त्वं प्रतिबन्धेन न भासतीव भवति इति प्रतिपादयन्ति। तथाहि - अध्येतृवर्गमध्यस्थपुत्राध्यायनशब्दवत्। भानेऽप्यभानं भानस्य प्रतिबन्धेन युज्यते। इत्युक्त्वा प्रतिबन्ध स्वरूपं निरूपयन्ति -प्रतिबन्धोऽस्ति भातीतिव्यवहारार्हवस्तुनि। तं निरस्य विरुद्धस्य तस्योत्पादनमुच्यते। अस्यायमभिप्रायः- अस्ति प्रकाशते इत्येवं प्रकारेण व्यवहारयोग्ये वस्तुनि तं व्यावहारं निराकृत्य नास्ति नाभाति इत्येवं रूपस्य व्यवहारस्य जननं प्रतिबन्धः इति।
अयं प्रतिबन्धः समानाभिहारादिरूपेण बहुविधः लोके। आत्मयाथात्म्याननुभवरूपप्रतिबन्धस्तु अविद्यैव केवला इति कथयन्ति। अतः प्रतिबन्धकं किमिति ज्ञात्वा तस्य निवारणार्थं प्रयत्नः आवश्यं कर्तव्यः साधकेन । विद्यारण्यश्रीचरणाः ध्यानदीपे अश्रद्धाधीन् प्रतिबन्धानुक्त्वा निवारणोपायांश्च प्रतिपादयन्ति। अयं विषयः अत्र किञ्चिदिव विचार्यते।
परोक्षज्ञानमश्रद्धा प्रतिबध्नाति नेतरत्।अविचारोऽपरोक्षस्य ज्ञानस्य प्रतिबन्धकः। अश्रद्धा परोक्षज्ञानं प्रतिबध्नाति। अविचारः अपरोक्षज्ञानस्य प्रतिबन्धकः इति। श्लोकेऽस्मिन् प्रतिबन्धकद्वयं प्रतिपाद्यते। अतः अश्रद्धानिवृत्तौ सकृदुपदेशादेव परोक्षज्ञानम् उत्पद्यते। एवं विचारादेव अपरोक्षज्ञानस्य प्रकाशः जायते। अतो विचारं विना प्रतिबन्धकस्य निवृर्तिर्न भवति। उत्तरोत्तरलोके विचारः कथं कर्तव्यः इति दर्शयति- विचार्याप्यापरोक्षेण ब्रह्मात्मनं न वेत्ति चेत्। आपरोक्ष्यावसानत्वाद्भूयोभूयोविचारयेत्। विचारयन्नामरणं नैवात्मानं लभेत् चेत्। जन्मान्तरे लभेतैव प्रतिबन्धक्षये। इह वामुत्र वा विद्येत्येवं सूत्रकृतोदितम्। शृण्वन्तोऽप्यत्र वहवो यन्न विद्युरिति श्रुतिः। अस्यायमभिप्रायः सम्यग्विचार्यापि ब्रह्मात्मैकत्वं अपरोक्षतया न जानाति चेदपि पुनः पुनर्विचार एव कर्तव्यः। आपरोक्ष्याव सानत्वात् भूयः भूयः विचारयेत्। आमरणं भूयो भूयो विचारयन् आत्मानं न लभेत चेत् जन्मान्तरे प्रतिबन्धक्षये सति लभेत एव6 'इह वा अमुत्र वा विद्या' इति सूत्रकृता उदितम्, 'श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः' इति श्रुतिः। प्रतिबन्धे सति इह जन्मनि ज्ञानं नोत्पद्यत इति श्रुतिः प्रतिपादयति। इह जन्मनि श्रवणादिकर्तुः जन्मान्तरेऽपरोक्षज्ञानं भवतीत्यत्रापि 'गर्भे नु सन्नन्वेषाम वेदमहं देवानां जनिमानि विश्वा' इति श्रुतिः प्रमाणम्। अस्याः श्रुतेः सारं विद्यारण्य स्वामिनः एवं संग्रह्य लिखन्ति - गर्भ एव शयानः सन् वामदेवोऽवबुद्धवान्। पूर्वाभ्यस्तविचारेण यद्वदध्यायनादिषु। बहुवारमधीतेऽपि यदा नायाति चेत् पुनः। दिनान्तरेऽनधीत्यैव पूर्वाधीतं स्मरेत्पुमान् प्रतिबन्धकस्य कारणत्वादेव वामदेवः पूर्वजन्मनि ज्ञानं न लब्धवान्। अनन्तरं जन्मनि प्रतिबन्धक्षये सति तस्य मातृगर्भे एव ज्ञानं अजायत। यदवत् अध्यायनादिषु। बहुवारं अधीते अपि यदा न आयाति चेत् पुनः दिनान्तरे प्रतिबन्धकक्षये अनधीत्यैव पूर्वाधीतं पुमान् स्मरेत्।

## अमृतवाणी गीतातत्वार्थबोधः॥



### शत्रुघ्नश्रीनिवासाचार्यः पण्डित शम्भुनाथ शास्त्री वेदान्ती भागलपुर, ( बिहार )

श्रीमते रामानुजाय नमः
योगी शान्तिमवाप्नुयात्
आपूर्यमाणमचलप्रतिष्ठं
समुद्रमापःप्रविशन्ति यद्वत् ।
तद्वत्कामा यं प्रविशन्ति सर्वे
स शान्तिमाप्नोति न कामकामी।।

**संस्कृतभाष्यम्-** यथा नदिनदाः सर्वे प्रविशन्तीति सागरम्। तथा कामास्तु योगीनां योगं गच्छन्ति तत्त्वतः।।1
कामनारहितः योगीनिर्विकारो महामुनिः।
सद्यः शान्तिमवाप्नोति
कामी भवति पातकः।।

श्रीमद्भगवद्गीतायाः द्वितीयाध्यस्य 70 तमे श्लोके भगवान् श्रीकृष्णः अर्जुनं सम्बोधयन् जितेन्द्रियानां पुरूषाणांलक्षणं कथयति- यथाआपूर्यमाणः नदीनामम्बुवेगात् विचलितःन भवति, पृथ्व्याः ये ये नदाः नद्यचश्च सन्ति सर्वाषां नदनदीनामापः वेगेन सागरं प्रविशन्ति मिलन्ति तथैव



इन्द्रियजन्यशब्दादिविषय भोगाभोगदशायां जितेन्द्रियः आत्मदर्शनतप्तःपुरुषःनिर्विकारः भूत्वा शान्तिम् प्रापति परमं पदं विन्दतीत्यर्थः। परञ्च शब्दरूपरसगन्धसस्पर्शादि- विषयरूपभोगेष्वासक्तः कामी शान्तिं न प्रापति।

अन्वयशब्दार्थः-यद्वत जैसे,आपूर्यमाणमजल से परिपूर्ण, अचल प्रतिष्ठम समभाव में स्थित, समुद्रमसमुद्र में, आपअनेक छोटी बड़ी नदियों के जल, प्रविशन्ति प्रवेश करते हैं (मिलते हैं), (फिर भी समुद्र एक रूप में स्थित रहता है, तद्वत्उसी प्रकार, सर्वेसमस्त,कामाः शब्द शब्दादि भोग विषय,उस संयमी पुरुष में, प्रविशन्ति प्रवेश करते हैं (इस अवस्था में भी शब्दादि विषयों के संयोग से उस योगी पुरुष का चित्त विकृत नहीं होता है,इसके विपरीत समान भाव में स्थित रहता है), (स एववही संयमी पुरुष), शान्तिमशान्ति को, आपति प्राप्त करता है, कामकामीशब्दादि विषयों की इच्छा रखने वाला पुरुष, ननहीं,
शान्तिम् शान्ति को आप्नोति प्राप्त करता है।

**तत्त्वार्थः-** जैसे सभी नदियों का जल,सब ओर से परिपूर्ण अचल मर्यादा वाले समुद्र में समा जाते हैं, किन्तु उससे समुद्र में क्षोभ पैदा नहीं होता है। वैसे ही जिस संयमी पुरुष में सारे भोग समा जाते हैं किन्तु, उस योगी पुरुष में किसी प्रकार का विकार उत्पन नहीं होता ,वही पुरुष शान्ति को प्राप्त करता है अर्थात् परमपद को प्राप्त करता है। भोगों को कामना करने वालों को कभी शान्ति नहीं मिलती है।

रहस्यात्मक-तथ्य-भगवान् श्रीकृष्ण विषाद युक्त अर्जुन को संयमी पुरुष के स्वरूप को क्रमशः बता रहे हैं। अर्जुन के माध्यम से भगवान् वैसे जागतिक जीव को लक्ष्य कर उपदेश दे रहे हैं जो मानव तन को पा कर इन्द्रियों के विषय रस में अपना बहुमूल्य जीवन व्यर्थ गवाँ रहे हैं। भगवान् ने संयमी पुरुष की तुलना धीर गंभीर समुद्र से की है। जिस प्रकार सब प्रकार से परिपूर्ण अति गम्भीर एवं एक रूप में रहने वाले समुद्र में संसार की छोटी बड़ी सभी नद -नदियों के जल प्रवेश कर जाते हैं। उनके प्रवेश करने या न करनेसे समुद्र में किसी प्रकार का विकार उत्पन्ननहीं होता अर्थात् समुद्र का जल न तो बढ़ता है और न ही घटता है अर्थात् समुद्र सदा एक रूप में परिपूर्ण व अचल रहता है , वह अपनी मर्यादा को कभी नहीं खोता है। उसी प्रकार संयमी पुरुष भी आत्मदर्शन से तृप्त होने के कारण इन्द्रियों के द्वारा शब्दादि विषयों के भोगने या न भोगने से किसी भी परिस्थिति में विचलित नहीं होते हैं अर्थात् उनमें किसी भी प्रकार का विकार उत्पन्न नहीं होता है ।इस स्वभाव का योगी ही परम शान्ति को प्राप्त करता है अर्थात् परमपद को प्राप्त करता है। इसके विपरीत इन्द्रियजन्य शब्दादि विषयों के भोग में आसक्त रहने वालों को शान्ति नहीं मिलती है। कहा भी गया है कि' भोगा न भुक्ताः वयमेव भुक्ताः' अर्थात् भोग को हम भोगते नहीं अपितु भोग ही हमें भोग लेते हैं। इसलिए भगवान् आगे के श्लोक में स्पष्ट कहते हैं कि- 'विहाय कामान्यः सर्वान्पुमांश्चरति निस्पृहः। निर्ममो निरहङ्कारः स शान्तिमधिगच्छति। अर्थात- जो मनुष्य समस्त शब्दादि विषयों के भोग की कामनाओं को त्यागकर लौकिक विषयों से निस्पह हो जाता है वह पुरुष समस्त ममता से रहित होकर आत्मदर्शन से तृप्त हो जाता है और परम शान्ति को प्राप्त हो जाता है।

## ॥ अमृतं संस्कृतम्॥



### गीताज्ञान संचरण समितिः, पटना, विहार, अध्यक्षः डॉक्टर सुदर्शन श्रीनिवास शाण्डिल्यः

।। धर्म एव जीवनम्।।
डॉक्टर सुदर्शन श्रीनिवास शाण्डिल्यः
।।।।। अध्यक्षः।।।।।।
गीताज्ञान संचरण समितिः।। पाटलिपुत्रं।।
विहारः।।

गीताज्ञानं सम्पूर्ण रूपेण धर्म एव।। वास्तविकः धर्मः गीताज्ञानमेव।।अत्र कृष्णस्य यस्सन्देशः स एव धर्मः। ।धर्मस्यापि धर्मः कृष्णः ,अतः कृष्ण एव साक्षाद्धर्मः। । मानव जीवनं केवलं धर्मायैव।।
प्रसिद्धोऽयं श्लोकः नीतिशास्त्रस्य
' आहार निद्रा भय मैथुनञ्च, सामान्यमेतत् पशुभिर्नराणां। धर्मो हि तेषामधिको विशेषः, धर्मेण हीनाः पशुभिः समानाः।।'
आहारादिः मानव-पशुमध्ये समस्वभावः,केवलं धर्मसेवनमात्रेण मानवाः कृत्यापि मानवाः। आकृतिमात्रेण पशुस्वभावसम्बन्धासक्तेन केवलं बाह्यतः मानवः आभ्यंतरिकेण पशुरेव।।



तेन गीताज्ञानं आकृत्या कृत्या च मानवः वाह्याभ्यन्तराभ्यां मानवः मानवो भवतु इति निदेशाय प्रवर्तितम्।।
गीताज्ञान महत् गभीरं दार्शनिकञ्च। प्रतिपदे प्रतिशब्दे च मानवात्मकल्याणाय धर्मसन्देशः सन्निविष्टः।।
अत्र विभिन्नैः पूज्यपादैः सिद्धैः ऋषिकल्पैः सर्वकल्याणाय आत्मज्ञानाय च विभिन्नः विभिन्नः सुविचारः प्रकटितः।।
स्वयं गीतायां प्रतिपदोक्तरूपेण सर्वत्र धर्मः ध्वन्यते। धर्मशब्दादेव गीतायाः आरम्भः।।
अत्र वहुकल्याणकरं गभीरं तात्पर्यं मानवेभ्यः अनुपालनाय सन्दिशति। समेषां कार्यारंभे धर्मः आश्रयणीयः। अशुभ कार्यारम्भेऽपि धर्मः ध्यातव्यः। येन सम्भवतः अशुभोऽपि शुभो भवेत्। धर्म एव मानव जीवनस्य नैसर्गिकः स्वभावः इति ज्ञानाय धर्मशब्दादेवारम्भः।।
दुराचार दुश्चिन्तनादयः संसार सम्बन्धेन वाह्यरूपेण आरोपिताः नात्मनः धर्मः।।
अतः सर्वात्मना मानवैः धर्म एव स्वकरणीयः, धर्मायैव यत्नो विधेयः।।
संसारे मात्रं धर्मः मम।। नान्यः ।।
गीतायाः आरम्भे धर्मः,गीतायाः अन्ते ममतेन सम्पूर्णा गीता'धर्मः मम'
सम्पूर्णगीतैव धर्मः।। अन्यः विचारः
गीतायाः प्रथम शब्दस्य 'ध'
गीतायाः अन्तिमशब्दस्य 'म'
इत्यनयोः संगोगेन धर्म इति शब्दः अभिध्वन्यते
तेन सम्पूर्णा गीता धर्म एव।।धर्मो रक्षति रक्षितः।। रक्षितः धर्म एव मां रक्षति।।
अन्यः एकः सूक्ष्मः दार्शनिक विचारः
धर्मावतारः युधिष्ठिरः तस्य संचरणकेन्द्रं कृष्णः तेन धर्मक्षेत्रः कृष्णः कृष्ण एव कर्मप्रेरकः तेन कृष्ण एव कर्मक्षेत्रः तस्मिन् समवेताः अर्थात् न्याय दर्शन मतेन समवाय सम्बन्धेन नित्येन स्थिताः पाण्डवाः कौरवाश्च यतो हि परमात्मा नित्यः, आत्मापि नित्यः अयुतसिद्धपदाथर्योः सम्बन्धः समवाय एव तेन इति मतेन परमात्मनि चराचरजगत् समवायसम्बन्धेन तिष्ठति। परं स्वविचारानुसारेण परमात्मस्थितोऽपि फलं लभते।।यथा धृतराष्ट्रः स्वमनस्स्थितविचारेण पुत्रनाशं प्राप्तवान। अर्जुनः आत्मकल्याणाय प्रश्नम् अपृच्छत् तेन जीवनस्यावश्यकतानुसारेण गीता निरगच्छत।।एकत्रैव चिन्तन भिन्नेन भिन्नं भिन्नं फलम।।अतः गीतायाः परमः सन्देशः सर्वदैव मानवाः शुभचिन्तनं कुर्युः।।
शुभचिन्तनं धर्मः।। तत्तु कृष्णस्मरणमेव।।
अतः भगवान् कृष्णः सदैव निगदतिमामनुस्मर।
**॥ जयतु कृष्णः॥**




छायाकारः सौरभ कुमार

**प्रयागराजः।** अफगानिस्ताने आपतितानाम् भारतीयानाम् परावर्तनाय याचना कुर्वन्तः जनाः

## लक्ष्यीकृताः केचन वैशिष्ट्यबिन्दवः इत्यादयः विषयाः सम्यक् आलोच्यन्ते

लक्ष्मीधरोद्गात्रा विरचितोऽयं नामनिर्मलदर्पणग्रन्थः प्रक्रियाकौमुद्याः अन्यतमः उपादेयः व्याख्याग्रन्थः यस्तु अद्यावधि अप्रकाशितावस्थायां पाण्डुलिपिरुपेण कुत्रचित् संग्रहालये कुत्रचित् ग्रन्थागारे वा पतितोऽस्ति। मया तु ग्रन्थस्यास्य उत्तरार्द्धस्य यथा तिङन्त-कृदन्त-भागयोः ताडपत्रमातृकाः कर्गजमातृकाः च संगृह्य तासां मूलमातृकाणां शुद्धपाठसम्पादनं तथा समीक्षाणात्मकमध्ययनं कृतं वर्त्तते। मया अत्र प्रस्तुतप्रबन्धस्य सीमानम् अभिलक्ष्य केवलं कृदन्तान्तर्गत-कृत्यप्रत्ययानां प्रक्रियानिरूपणे प्रारम्भिकमुपक्रमः, नामनिर्मलदर्पणे कृदन्तप्रकरणम् कृदन्तप्रकरणे कृत्यप्रत्ययाः, कृत्यभागे सूत्रोपक्रमवैशिष्ट्यम्, ग्रन्थकारस्य सूत्रलेखनशैली, लक्ष्यीकृताः केचन वैशिष्ट्यबिन्दवः इत्यादयः विषयाः सम्यक् आलोच्यन्ते। तथा च कतिपयानां सूत्राणां व्याख्यानशैलीं महाभाष्य-काशिका-प्रक्रियाकौमुदी-सिद्धान्तकौमुदीनां व्याख्यानशैल्या सह तुलयित्वा ग्रन्थतः लक्ष्यीकृतानि वैशिष्ट्यानि प्रतिपादयतुम् उद्यमः विहितोऽस्मिन् लघुशोधनिबन्धे शब्दशास्त्रे प्रक्रियाक्रमस्य प्रमुखग्रन्थेषु रामचन्द्राचार्य्येण प्रणीता 'प्रक्रियाकौमुदी' एकमौलिकग्रन्थः। शब्दशास्त्रस्य लक्ष्यपूर्त्तये विशेषतः शब्दसाधनज्ञानार्थं ग्रन्थोऽयं प्रवर्त्तते। इदानीं ग्रन्थस्यास्य टीकाद्वयं प्राप्यते प्रसादः प्रकाशश्च। प्रसादटीकाकारः रामचन्द्राचार्य्यस्य पौत्र-नृसिंहस्य पुत्रः विठ्ठलाचार्य्यः एव। प्रकाशटीकाकारः भवति शेषकृष्णः। इदानीं तु महतः आनन्दस्य विषयः वर्त्तते यत् प्रक्रियाकौमुद्याः अन्य एकः व्याख्याग्रन्थः नाम्ना 'नामनिर्मलदर्पणः' पाण्डुलिपिरूपेण समुपलभ्यते ओडिशा-राज्य-संग्रहालये पुनश्च माड्रास-विश्वविद्यालय-ग्रन्थागारे । प्रसादटीकायाः प्रभावः नामनिर्मलदर्पणे परिलक्ष्यते एव।

## शिशु-अनन्तदासः



शिशु-संप्रदायस्य प्रातिष्ठाता शिशु-अनन्तः 'पञ्चसखा' गोष्ठीषु सर्वकनिष्ठत्वेन परिगणितः । अयं महात्मा 1486 खीष्टाब्दे पुरी जिल्लायाः 'बालिपाटणा' नामके स्थाने एकस्मिन् करण परिवारे अजायत । केचन अस्य जन्मस्थानं कौणार्कभूमौ अभवदिति कथयन्ति ,तन्मृग्यम् । अस्य पिता कपिल महान्तिः माता च गौरी देवी आस्ताम् । तदुक्तम् ईश्वरदासेन चैतन्यभागवते- 'कपिल महान्ति ता नाम । ताहार पुत्र अनुपम ? अनन्त माहान्ति बोलाइ । कोठ करण होइथाइ ?' भुवनेश्वरस्थितः 'खण्डगिरि' स्थानमस्य महात्मनः साधनपीठ आसीत् । किम्बदन्ती आसीत्सः सूर्यदेवादेशेन पुरीं गत्वा चैतन्यात् दीक्षां प्रगृह्य एकाक्षर-सूर्यमन्त्रं प्राप्तवान् । तस्मात् सहस्रश्लोकानपि प्राप्तवान् । शिशु अनन्तः प्रख्यातो योगी आसीत् । योगशक्त्या शिशुः भूत्वा सः देव्याः महालक्ष्म्याः कोलमण्डनं चकार । अनया योगविभूत्या सन्तुष्टः सन् स्वयं देवाधिदेवो जगन्नाथस्तस्मै शिशु-उपाधिं दत्तवान् इति कर्णाकर्णिकया श्रुत्या ज्ञायते । अयं सम्बादः ईश्वरदासकृत-चैतन्यभागवतात् प्रमाणीक्रियते । यच्चोक्तम्- 'शिशु रूपरे मोते भ्रम । अनन्त शिशु तोर नाम ? पृथिवी येते दिन थिव । तो नाम विख्यात होइव ?' इति । अनन्तदासस्य बहवो ग्रन्था आसन् । तेषु हेतु उदय भागवतं, चुम्बक मालिका, अणाकार शवद, भवमुक्तिदायक गीता, अर्थतारिणी, भजनतत्त्वम्, मन्त्रचन्द्रिका, गरुड-केशव संम्बादः, पिण्ड-ब्रह्माण्ड गीता, ठिक बाखरः, उदे बाखरः, छाट बाखरः, आगत भविष्यः, पद्मवन रासः, ठुल शून्यरासः, यन्त्रटीका, धामछत्रम्, वैष्णव पुराणम् ,शिशुमन्त्रविचारादयः प्रसिद्धाः वर्तन्ते । अनन्तदासस्य बहु शिष्या आसन् । शिशु अर्जुन दासः, शिशु वनमालि दासः, शिशु शंकर दासः, शिशु प्रताप रायः एवं शिशु दयानिधि दासप्रमुखाः मूर्द्धन्याः सन्ति । एते सर्वे शिशु संप्रदायेषु अन्तर्भुक्ता भवन्ति ।
'पञ्चसखा' इति कल्पना ओडिआ साहित्यस्य बलिष्ठा परंपरा । अयं



विशालः फलपुष्पयुक्त-पनसवृक्षरूपेण परिगणितः कदाचित् । वृक्षस्यात्मा स्वयं जगन्नाथः । द्रष्टा श्रीचैतन्यः । तथाहि- 'जगन्नाथ दास शुणिले । मञ्जिरूपी वृक्ष स्थापिले ? प्रभुंकु कले सुमरण । बालुत वृक्ष कले पुण
बालुत वृक्षकु बलराम । कले युवा डाल पत्रेण मो आज्ञा पाइ वृक्ष तोष । वउले फलिला पणस अच्युत आज्ञारे पणस । वृक्षरे पाचिण अवश्य
आज्ञा प्रमाणे वृक्ष पुण । भूमिकु ओहलि पडिण पणस तोलि शिशु नेइ । चैतन्य पारुशे दिअइ पक्व पणस चइतन । भांगिण वाण्टिले आपण ?' इति । इदं सुवासितं सुन्दरतमं मधुरफलं षोडशशताब्द्याः आरभ्य अद्यावधि सर्वत्र सादु भोजनरूपेण प्रतिभाति । 'हेतूदय भागवतम्' अनन्तदासस्य कृतिषु अन्यतमम् । अस्मिन् ग्रन्थे पिण्ड ब्रह्माण्डतत्त्वम्, काया साधनम्, जगन्नाथस्य बुद्धरूप स्वीकारः, शरीरे जगन्नाथस्य अवस्थितिः एवं राधाकृष्णयोः जीवात्म-पपरमात्म रूपेण वर्णनं मिलति । यच्चोक्तं-'श्रीराधाकृष्ण वेनि जन । जीव परम रूपे जाण ?' इति । अनयोः राधाकृष्णयोरवस्थानं धवलांगद्वीपे वर्तते । गोपीभक्तेः निदर्शन स्वरूपेण केवलं कामिनी भावेन हि कृष्णप्राप्तिर्जायते । अपि च तत्र- 'कामिनी गणे आभासइ । पुरुष लेश तहिं नांहि ?' इति प्रेमभक्तेः पराकाष्ठा वर्णिता । सृष्टिप्रक्रिया चात्र- आदौ ॐकारः । तस्मादाकाशः । आकाशात् विन्दुः । विन्दोः मनः । मनसो माया । मायायाः सत्यम् । सत्यात् विराड् इति समुत्पद्यन्ते । हेतूदय-भागवते आदौ गुरुतत्त्वं वर्णितम् । गुरुः सर्वेषां जीवानां समुद्धरकर्ता । तं विना मुक्तौ नाधिकारो वर्तते । शिष्यस्य जिज्ञासा बहुविधा अस्ति । आदौ शास्त्र श्रवणम् । तत्तु –'यदि शुणइ मूढपणे । वधिर जन्म अकारणे ।यदि शुणइ ममतारे । असुर जन्म लभे नरे यदि शुणइ अहं गुणे । नर्क भोजन अनुदिने ?
ये शुणि करे उपहास । नर्के जन्म ता अवश्य अपि चात्र-येवण जन ए दीक्षाकु । विख्याति कहइ आनकु एमन्ते सात जन्म गले । पुणि जन्मइ भाट घरे भाट वनिता पणे पुन । दिन वञ्चइ अनुदिन एहि मतरे दिन जाइ । जीव उद्धरि न पारइ येउं गुपत गुरुवाणी । विख्यात कला मूढ प्राणी तेणु पाइला सेहु फल । जन्म लभिला भाट कुल गुरु ये शिष्यंक विचार। अन्यकु दिशे अन्धकार ' इति गुरोः तत्त्वश्रवणविधानं वर्णितम। 'असाधन-मार्गः' अथवा अजपाजपविधिः अनन्तदासस्य महती साधना वर्तते । अवनाक्षर-जपेन कोटिजन्मस्य पापं विधौति इति तस्य नय आसीत् । अयं मार्गः न केनापि साधनकोटिषु अन्तर्भुक्तः । तस्मादसाधनमार्गत्वेन परिगणितः स्वीकृतश्च । तथाहि-'दन्त ओष्ट न हलिब शिर क्ण्ठ न कम्पिब ।
तीर्थव्रतादिकमपि न साधनमार्गे सहायका भवन्ति । शरीरमेव सकलसाधन स्थलम् । सुस्थे शरीरे सकलाः साधनाः सिध्यन्ति । तस्मात्पिण्डब्रह्माण्डसाधनं सर्वश्रेष्ठम् । यतो हि -'न या तीर्थ व्रत करि । हृदे जप राम हरि ।कहन्ति अनन्त शिशु तरिवु ए भवकु ' इति नामस्मरणस्य सर्वित्कृष्टा साधना उक्ता । रा म अथवा ह रि इति संयुक्ताक्षर-स्मरणं नक्तन्दिवं कार्यम् । तद्व्यतिरिक्तं द्वितीयो मार्गो नावशिष्यते । तथाहि- 'ए वेनि अक्षर येवे एकत्र होइव । हरि वोलि करि नाम हृदरे बुणिव । हरि उदे हेउछन्ति न जाणन्ति केहि । कहन्ति अनन्त शिशु हरीन्द्रकु ध्यायी ?' इति सर्वं हरिमयं जगदिति सप्रमाणं निगदितं तेन । साधनसिद्धः अनन्तदासस्य आसीत् जगन्नाथे प्रगाढो विश्वासः । परम-भागवतोत्तमस्य श्रीहरेर्विशुद्धभक्तिं प्राप्तुं तेन सर्वादौ चेष्टितः । सफलीकृतश्च । जय जगन्नाथ ।

सहायक ग्रन्थाः


1-पञ्चसखा ओडिआ साहित्य-अध्यापकः देवेन्द्र महान्तिः
2- सन्थ भक्ति साहित्य-चित्तरंजन दासः
3-कृष्णचन्द्र साहु रचनासम्भार 5 भाग
4- ओडिआ स्नातक पाठ्यक्रमः- Odisha state open university ,sambalpur
5--ओडिआ साहित्यर इतिहास- डः वंशीधर महान्तिः
6- ओडिआ साहित्यर आदिपर्व- सुरेन्द्र महान्तिः
7-ओडिआ साहित्यर इतिहास- पं सूर्यनारायण दासः
8- ओडिआ साहित्यर सांस्कृतिक विचारधारा- चित्तरंजन दासः
9--ओडिशार धर्मधारारे पञ्चसखा परिकल्पना- डः नटवर सामन्त रायः
10-महापुरुष परिचय ओ बाणी- निमांइ चरण दासः


## लक्ष्यीकृताः केचन वैशिष्ट्यविन्दवः

काशिका-प्रक्रियाकौमुदी-सिद्धान्तकौमुद्यादीनां व्याख्यानशैल्या सह नामनिर्मलदर्पणस्य व्याख्यानशैली तुलयितुं शक्यते। सर्वत्र पाणिनीयसूत्राणामेव व्याख्यानं विहितम्। आसु व्याख्यासु वार्त्तिकैः परामृष्ट-परिवर्त्तनादिकं पूर्वोक्त-व्याख्यासु सन्नियोजितम् भवति यद्यपि मूलसूत्रे तत् नास्ति। नामनिर्मलदर्पणे अपि तथा क्रियते। कदाचित् कस्यापि सूत्रस्य व्याख्यानप्रारम्भे तस्य सूत्रस्य प्राथमिक द्वित्रान्शब्दमुपक्रम्य नामनिर्मलदर्पणकारः व्याख्यामारभते। अपरस्तु भवति कदाचित् पाणिनीयसूत्रनिर्देशं अकृत्वा तदभिधेयार्थं परवर्त्ती-सूत्रार्थेन सह योजयित्वा उदाहरणपुरःसरं व्याख्यानं विहितम्। उदाहरणं यथा- 'प्रत्यपिभ्यां ग्रहेः' (3.1.118) इत्यस्य व्याख्याने 'ग्रामगृह्या' इत्यत्र स्त्रीलिङ्गविशिष्टं 'गृह्या' इति शब्दस्य स्त्रीत्वस्य प्रसङ्गः वस्तुतः 'पदास्वैरिबाह्यापक्ष्येषु' च (3.1.119) सूत्रे वर्त्तते, किन्तु नामनिर्मलदर्पणे अस्य सूत्रस्य स्वतन्त्ररूपेण व्याख्यानं न विहितम्, परन्तु अस्य सूत्रस्य व्याख्येयः अर्थः पूर्वसूत्रस्य व्याख्याने पाक्षिकरूपेण सन्नियोजितः। अपि च पूर्वोक्त सर्वासु व्याख्यासु 'प्रत्यपिभ्यां ग्रहेः' (3.1.118) इति सूत्रं छन्दोविषयकमिति स्वीक्रियते किन्तु नामनिर्मलदर्पणकारः तस्मिन् विषये नीरवोऽस्ति। सूत्रलक्ष्यानि उदाहरणानि छन्दोविषयकानि अथवा सामान्यरूपेण प्रयोज्यानि तद्विषये न काचित् सूचना प्रदीयते उत्कलप्रान्ते उपलब्धासु व्याकरण-विषयक-मातृकासु पाणिनीय-व्याकरणसम्बन्धि-मातृकातुलनया कातन्त्र- सारस्वत-व्याकरणसम्बन्धि-टीकाग्रन्थानां बाहुल्यं दृश्यते। तत् पश्चात् चान्द्र-हरिनामामृत-व्याकरण-मातृकाणां स्थानम्। उत्कलीयाः वैयाकरणाः वैजलदेवादयः वैजलकारिका-चाङ्कुकारिका-व्याकरणानां प्रवक्तारः आसन्। किन्तु सम्भवतः पाणिनीयव्याकरणस्य प्रचारे तथा गुरुत्वं नासीत्। एवंभूतावस्थायां पञ्चदशशताब्द्यां पाणिनीयपरम्परायां प्रसिद्ध-प्रक्रियाग्रन्थस्य स्वकीयं व्याख्यानं लिखितुं लक्ष्मीधरोद्गातुः प्रयासः नूनं स्वागतार्हः वर्त्तते। अनेन प्रयासेन सुमहत्-पाणिनीयव्याकरणस्य प्रसारं प्रचारं च तस्य लक्ष्यं स्यात्। व्याख्यानस्य परिशीलनेन दृश्यते यदत्र पूर्ववर्त्ती-प्रसाद-व्याख्यायाः प्रभावः दृश्यते।

## नामनिर्मलदर्पणे ग्रन्थकारस्य सूत्रलिखनशैली अत्र इदम् अवधेयं यत् नामनिर्मल दर्पणग्रन्थस्य

पाण्डुलिप्यां कतिपयानि मूल-व्याख्येय-सूत्राणि पूर्णरूपेण न लिखितानि अपितु सूत्रारम्भात्। द्वित्राशब्दैः इति-शब्द-निर्देशपूर्वकं सूत्रव्याख्या कृता ग्रन्थकारेण। यथा- 'तयोरेव कृत्यक्तखलर्थाः' (3.4.70) सूत्रं तत्र केवलं 'तयोरेवेति' लिखित्वा व्याख्या क्रियते। परन्तु कतिपयानि सूत्राणि तु पूर्णरूपेण लिखितानि पाण्डुलिप्यां यथा 'कर्त्तरि कृत्' (3.4.67), 'तव्यत्तव्यानीयरः' (3.1.96), 'कृत्य चः' (8.4.29) इत्यादीनि। तत्र सर्वाणि सूत्राणि 'इति'-शब्देन एव निर्दिष्टानि सन्ति। अनुमीयते यत् एषा ग्रन्थकारस्य लक्ष्मीधरोद्गातुः स्वकीया शैली स्यात्।



सुखार्थिनः कुतोविद्या नास्ति विद्यार्थिनः सुखम्। सुखार्थी वा त्यजेद् विद्यां विद्यार्थी वा त्यजेत् सुखम्।

**अर्थ –** सुख चाहने वाले को विद्या कहाँ से, और विद्यार्थी को सुख कहाँ से, सुख की इच्छा रखने वाले को विद्या और विद्या की इच्छा रखने वाले को सुख का त्याग कर देना चाहिए।

